चक्रवर्त्तिकृतप्रश्नानन्तरं भगवांस्तं भरतचक्रवर्त्तिनम् एवं=वक्ष्यमाणप्रकारेण अवादीत्=उक्तवान् –हे भरत! अत्र मम समवसरणे सम्प्रति एतादृशः=त्वदीयप्रश्नानुरूपः कोऽपि जीवो नास्ति। परन्तु समवसरणाद् बहिर्यः त्रिदण्डिवेषधारी तव पुत्रो मरीचिस्तिष्ठति, असौ कालक्रमेण=कालपरम्परया अत्र भरते=दक्षिणभरते पोतनपुरे नगरे त्रिपृष्ठनामा प्रथमो वासुदेवो भविष्यति, अपरविदेहे=पश्चिममहाविदेहक्षेत्रे च मूकाया नगर्यां प्रियमित्रनामा चक्रवर्त्ती भविष्यति, पुनरत्र भरतक्षेत्रे महावीरनामा चरमस्तीर्थंकरो भविष्यति। भगवत एवं वचनं श्रुत्वा भरतचक्रवर्त्ती समवसरणाद् बहिःस्थितं मरीचिमुपागम्य=बहिः स्थितस्य मरीचेः समीपमागत्य एवमवादीत्–भो त्रिदण्डिन्! मरीचे! तव ईदृशं वेषं=त्रिदण्डिनां वेष वन्दितुं मे=मम न कल्पते। पुनः=तथापि त्वं यत् अनागतकाले=भविष्यत्काले अस्यामवसर्पिण्याम् अस्मिन् दक्षिणे भारते वर्षे पोतनपुरे त्रिपृष्ठनामा प्रथमो वासुदेवः, ततोऽपरविदेहे मूकायां नगर्यां प्रियव्रतनामा चक्रवर्त्ती, ततोऽत्र दक्षिणे भरते महावीरनामाऽन्तिम-

---

भरत चक्रवर्त्ती के प्रश्न करने के पश्चात् भगवान्, भरत चक्रवर्त्ती से इस प्रकार आगे कहे अनुसार बोले–'हे भरत! मेरे समवसरण में इस समय तुम्हारे प्रश्न के अनुरूप कोई जीव नहीं है। किन्तु समवसरण से बाहर त्रिदंडी के वेष को धारण करनेवाला तुम्हारा पुत्र जो मरीचि है, वह कालक्रम से इस दक्षिण भरतक्षेत्र में पोतनपुर नगर में त्रिपृष्ठ नामक प्रथम वासुदेव होगा, पश्चिम महाविदेह की मूका नगरी में प्रियमित्र नामका चक्रवर्त्ती होगा और फिर इसी भरतक्षेत्र में महावीर नामक अन्तिम तीर्थंकर होगा।

भगवान् के ऐसे वचन सुनकर समवसरण से बाहर स्थित मरीचि के निकट जाकर भरत चक्रवर्त्ती ने कहा–'हे त्रिदण्ड के धारक मरीचि! तुम्हारे त्रिदण्डी के वेष को वन्दना करना मेरे लिए उचित नहीं है, तथापि तुम भविष्यत् काल में, इसी अवसर्पिणी में, इसी दक्षिण भरत के पोतनपुर नगर में त्रिपृष्ठ

---

જગતના પડ પર આવશે કે કેમ? શ્રી ભગવાને કહ્યું કે–હે ભરત! આ સમવસરણમા તો નહિ પણ સમવસરણની બહાર ત્રિદંડીનો વેષ ધારણ કરનાર તારો પુત્ર મરીચિ છે. તે વાસુદેવ, ચક્રવતી અને તીર્થંકર. આ ત્રણે પદવીનો ધારક બની આ ચોવીસીમા ચરમ તીર્થંકર તરીકે પૂજાશે.

ભગવાનના આવા વચનો સાંભળી ભરતચક્રવતીએ સમવસરણની બહાર જઇ 'ત્રિદંડી' ને ભાવી તીર્થંકર તરીકે નમસ્કાર કરી સર્વ હકીકતની તેને જાણ કરી. જાણ થતાં જ ત્રિદંડીનો આત્મા 'મદ' થી ઘેરાઇ ગયો ને 'જગતની શ્રેષ્ઠ પદવીઓ ભાવીકાલમાં મેળવશે' તે સાંભળી જાતિ અને કુલમદના અંકુરો તેનામાં ફૂટવા લાગ્યાં,

तीर्थकरस्य भविष्यसि, अतस्तीर्थकरत्वेन भाविनं=भविष्यत्तीर्थकरं त्वां वन्दे=नमस्करोमि। निजपितुर्भरतचक्रिण एवं वचनश्रवणेन पापभारः=पापसमूहरूपः स्फारः=अतिशयः कुलमदो मरीचिम् आविशत्। नात्र चित्रम्, यद् मरीचिः कुलमदेनाक्रान्त । यतः कुलादिकृतो मदः समयमासाद्य=समयं प्राप्य विहङ्गमः=पक्षी नीडमिव= पक्षिनिवासस्थानमिव सद्यः=तत्क्षणे एव जनमाविशति, इति=हेतोः स मरीचिस्तत्क्षण एव अपारससारकान्तार परिभ्रमणकारकम्—अपारः=निरवधिको यः संसारः=चतुर्गतिकरूपः, स एव कान्तारः=दुर्गमो मार्गो रागद्वेषादिलुण्टकाऽऽकीर्णत्वात्, तत्र यत्परिभ्रमणं=पुनः पुनर्जन्ममरणं, तस्य कारकम्, तथा—सकल—सुखतरुमूलो मूलकम्—सकलानि= ऐहिकपारलौकिकानि समस्तानि यानि सुखानि फलोपमानि तेषां तरुः=वृक्षो धर्मस्तस्य मूलं=विनयस्तस्य उन्मूलकं=विनाशकं मानहालाहलं—मानोऽत्र कुलमदः, स एव हालाहलं=महाविषं तत्—कुलमदरूपं कालकूटविषम्

नामक प्रथम वासुदेव, फिर पश्चिम महाविदेह की मूका नगरी में प्रियव्रत नामक चक्रवर्ती और फिर इस दक्षिण भरतक्षेत्र में महावीर नामक परम तीर्थंकर होओगे; अत एव तुम को मैं नमस्कार करता हूँ।'

अपने पिता भरत चक्रवर्ती के इस प्रकार के वचन सुनकर मरीचि में पापों का पिण्ड, घोर, कुलमद प्रवेश कर गया, अर्थात् कुल का मद उत्पन्न हो गया।

मरीचि को कुलमद उत्पन्न हो गया, इसमें कोई आश्चर्य की बात नहीं। क्यों कि कुल आदि का मद अवसर पाकर मनुष्य में उसी तरह प्रवेश कर लेता है, जैसे पक्षी नीड—घोसले में प्रवेश कर लेता है। इस कारण मरीचिने उसी समय अनन्त, चारगति रूप तथा राग—द्वेष आदि लुटेरों से व्याप्त होने के कारण दुर्गम ससार—कान्तार में पुनः पुनः भ्रमण करने के कारणभूत और समस्त सुख रूपी फलों के वृक्ष धर्म के मूल अर्थात् विनय को उखाड़ कर फेंक देनेवाले कुलमदरूपी हालाहल—कालकूट को पी

જે આત્મોન્નતિ મેળવી હતી તે ક્ષણવારમાં 'અહંભાવ' ને લીધે ખોઇ બેઠા ને ચતુર્ગતિની ચોપાટ ખેલવાની શરૂ કરી દીધી. 'અહંકાર—અભિમાન—અહંભાવ—અહંતા—મમત્વ ભાવ આ સઘળા પર્યાયવાચક શબ્દો છે તેમાં મનો મર્મ એક જ છે આ મુખ્ય દુર્ગુણ તમામ નાના મોટા દુર્ગુણોને નોતરે છે ને અહંભાવ' ને મધ્યબિન્દુ માં રાખી આત્માને સર્વાંગી હોવી જાય છે. આત્માર્થી પુરુષને સમયે સમયે પોતાનો સૂક્ષ્મ ઉપયોગ રાખી આ દુર્ગુણમાંથી છુટવાને પ્રયત્નશીલ રહેવુ યોગ્ય છે જગતના સર્વોત્કૃષ્ટ પદાર્થોથી માંડી દેક સુધીના પદાર્થોને આ જીવે

अपिवत्=पीतवान् । तत खलु स मरीचिः हर्षवशविसर्पद्धृदय –हर्षवशात्=निजमहत्त्वश्रवणजनितहर्षवशात् विसर्पत्=उच्छ्वलद् हृदयं यस्य स तथा–अत्यन्तहर्षान्दोलितहृदयः सन् नृत्यन् एवम्=अनेन प्रकारेण अवादीत्=कथितवान्–अहो ! कीदृशं मम उत्तमम्=उत्कृष्टतमं कुलमस्ति, यस्मिन् कुले महर्द्धिकैः=विशिष्टविमान-परिवारादियुक्तैः, महाद्युतिकैः=विशिष्टशरीरप्रभाभास्वरैः, महाप्रभावैः=अचिन्त्यप्रभावयुक्तैः. महाबलैः= अत्यन्तबलशालिभिः, महायशोभिः=विशालकीर्त्तिमद्भिः, चतुष्षष्टीन्द्रैः=चतुष्षष्टिसंख्यकैर्देवस्वामिभिः, अन्यै-र्देवैश्च देवीभिश्च वन्दितः=नमस्कृतः त्रैलोक्यनाथः=लोकत्रयेश्वरो धर्मवरचातुरन्तचक्रवर्त्ती–दानशीलतपोभावैश्चतसृणां नरकादिगतीनां चतुर्णां वा कषायाणाम् अन्तो=नाशो यस्मात्, अथवा चतस्रो गतीश्चतुरो वा कषायान् अन्तय-ति=नाशयतीति, यद्वा चतुर्भिर्दानशीलतपोभावैः कृत्वा अन्तो=रम्यः–"मृताववसिते रम्ये समाप्तावन्त इष्यते"

---

लिया । तब मरीचि का हृदय अपनी महत्ता को सुनने से उत्पन्न हुए हर्ष के कारण उछलने लगा । वह नाचता हुआ इस प्रकार बोला–'अहा ! मेरा कुल कैसा उत्कृष्टतम है, जिसमें शरीरकी अलौकिक दीप्ति से जगमगाते हुए, अचिन्त्य प्रभाव से सम्पन्न, अत्यन्त बलशाली और विशाल कीर्त्तिवाले चौंसठ इन्द्रों के द्वारा तथा अन्य देवों और देवियों के द्वारा वन्दित तीन लोक के नाथ तथा धर्मवरचातुरन्त-चक्रवर्त्ती मेरे पितामह भगवान् ऋषभदेव हैं !

'धर्मवरचातुरन्तचक्रवर्त्ती' का अर्थ इस प्रकार है–दान शील तप और भावरूप चतुर्विध धर्म के द्वारा, नरकादि चार गतियों का अथवा क्रोधादि चार कषायों का जिससे अत होता है, अथवा चार गतियों और चार कषायों का जो अंत कर देता है, अथवा दान शील तप भाव से जो 'अन्त' अर्थात् 'रमणीय' है, वह 'चतुरन्त' कहलाता है ।

---

અહંભાવે કે મમત્વભાવે પકડયાં છે. માટે જ્ઞાનીઓનું કથન એ જ છે કે 'હું પણુ' ની ભાવનાને છોડો, એટલે તમામ કલ્પનાઓ અને કાલ્પનિક સુખો ઇચ્છાઓ છુટી જશે.

ભગવાન ઋષભદેવ 'ચાતુરન્તચક્રવર્તી' કહેવાતાં, કારણુ કે ચારેગતિનો અંત લાવવાનું સાધન તેમને મોજુદ હતું. દાન, શીલ, તપ અને ભાવ રૂપી ચાર ધર્મના દ્વારો તેમણે ઉઘાડયા હતાં, ચાર કષાયોની ચોકડીને તેમણે નિર્બીજ કરી નાખી હતી, ચાર દિશાઓ સુધી પ્રસરેલા લોકના પરમાણુએ પરમાણુ તેમના જ્ઞાનમાં પ્રકાશતા હતાં તેથી તેઓ સ્વપરપ્રકાશક તરીકે રહી તે દૃષ્ટિએ પણ 'ચાતુરન્ત' કહેવાતા. દાન–શીલ–તપ અને ભાવ જેનામાં

इति विश्वकोषात्। अथवा—चत्वारो दानादयोऽन्ता अवयवा यस्य, यद्वा—चत्वारो दानादयः अन्ताः=स्वरूपाणि यस्य, 'अन्तोऽवयवे स्वरूपे च' इति हैमः, स चतुरन्तः, स एव चातुरन्तः, चातुरन्त एव चक्रं=जन्मजरा-मरणोच्छेदकत्वेन चक्रतुल्यत्वात्, वरं च तच्चातुरन्तचक्रं वरचातुरन्तचक्रं, वरपदेन राजचक्रापेक्षयाऽस्य श्रेष्ठत्वं व्यज्यते लोकद्वयसुखसाधकत्वात्, धर्म एव वरचातुरन्तचक्रं, धर्मवरचातुरन्तचक्रं, तादृशस्य धर्मातिरिक्तस्या संभवात्, अत एव सौगतादिधर्माभासनिरासः, तेषां तात्त्विकार्थप्रतिपादकत्वाभावेन श्रेष्ठत्वाभावात्। धर्मवर चातुरन्तचक्रेण वर्तितुं शीलं यस्य स तथा। चक्रवर्तिपदेन षट्खण्डाधिपतिसादृश्यं व्यज्यते, तथाहि—चत्वारः

अथवा दान आदि चार जिसके अन्त—अवयव—विभाग हैं वह भी 'चतुरन्त' कहलाता है। अथवा दान आदि चार जिसके अन्त—स्वरूप हैं, वह 'चतुरन्त है। चतुरन्त ही चातुरन्त कहलाता है।

जन्म, जरा और मरण का विनाशक होने के कारण चक्र के समान जो हो वह चक्र कहा जाता है। इस प्रकार चार का अन्त करनेवाला, चार से रमणीय, चार अवयव वाला और चार स्वरूप वाला जो चक्र है, उसको 'चातुरन्तचक्र' कहते हैं। यह चातुरन्तचक्र वर है अर्थात् इहलोक और परलोकमें सुख का कारण होने से राजचक्र आदि की अपेक्षा श्रेष्ठ है। अत एव उसको 'वरचातुरन्तचक्र' कहा है। यह 'वरचातुरन्तचक्र' धर्म ही हो सकता है, धर्म के अतिरिक्त अन्य नहीं हो सकता, इस कारण उसे 'धर्म वरचातुरन्तचक्र' कहा है। इस कथन से बौद्ध आदि धर्माभासों—मिथ्याधर्मों का निषेध किया गया है, क्यों कि वे वास्तविक तत्त्व का प्रतिपादन नहीं करते और इस कारण उनमें श्रेष्ठता नहीं है। 'धर्मवर चातुरन्तचक्र' से वर्तन करना जिनका स्वभाव है, उन भगवान् को 'धर्मवरचातुरन्तचक्रवर्ती' कहते हैं।

એકાકારરૂપે પરિણમી રહ્યા હતા જે ામા ઉપરના ચતુષ્ટયે। સ્વાભાવિક રૂપે રીતે તરી આવતાં હતા જેથી પણ તેઓ 'ચાતુરન્ત' કહેવાતાં.

જન્મ—જરા—મરણનો જે દ્વારા નાશ થાય છે તેને ચક્ર કહે છે આ પ્રમાણે ચાર ગતિનો અન્ત કરવા વાળા ચાર કષાયોથી રહિત અને ચાર અવયવ (ક્ષાયિકભાવ ક્ષાયિકચારિત્ર—કેવલજ્ઞાન—કેવલદર્શન) વાળા હોવાથી પ્રભુને ચક્રવર્તી' તરીકે સંબોધવામાં આવે છે

'ચાતુરન્તચક્રવર્તી' તો કેવળ રાજવ્યવીયા અને મિથ્યાવાદીઓ પણ ઘણી વખત બની શકે છે એટલે ભગવાનને ધર્મવરચાતુરન્તચક્રવર્તી કહ્યાં છે એમ કહેવાથી જગતમાં ચાલતા મિથ્યા ધર્મો નહિ પરંતુ

उत्तरदिशि हिमवान् शेषदिक्षु चोपाधिभेदेन समुद्रा अन्ताः=सीमानस्तेषु स्वामित्वेन भवश्चातुरन्तः, चक्रेण=रत्न-
भूतप्रहरणविशेषेण वर्त्तितुं शीलं यस्य स चक्रवर्त्ती, चातुरन्तश्च स चक्रवर्त्ती-चातुरन्तचक्रवर्त्ती, धर्मेण=न्यायेन
वरः=श्रेष्ठ इतरराजापेक्षयेति धर्मवरः, धर्मः=प्राणातिपातादिनिवृत्तिदानशीलादिरूपः-"धर्मः पुण्ययमन्याय-
स्वभावाऽऽचारसोमपाः" इत्यमरः; स चासौ चातुरन्तचक्रवर्त्ती चेति। यद्वा-चातुरन्तं
च तच्चक्रं चेति चातुरन्तचक्रं, वरं च तच्चातुरन्तचक्रं वरचातुरन्तचक्रं, धर्मो वरचातु-
रन्तचक्रमिव-धर्मवरचातुरन्तचक्रं, तेन वर्त्तितुं शीलमस्येति तथाभूत ऋषभजिनो मम पितामहोऽस्ति १। तथा
चक्ररत्नप्रधानः-चक्ररत्नं प्रधानं=श्रे प्रहरणेषु यस्य सः-चक्ररत्नरूपश्रेष्ठप्रहरणधारीत्यर्थः, एकच्छत्राम्-एकमेव
छत्रं=नृपलक्ष्म यस्यां सा तथा ताम्-एकराजाधीनां, ससागरां=सागरपर्यन्तां वसुधां शासत्=रक्षन्, नवनिधि-

चक्रवर्त्ती पद से छह खण्ड के अधिपति की सदृशता सूचित की है। अर्थात् भगवान् को चक्रवर्त्ती के समान प्रकट किया है। उत्तर दिशा में हिमवान् पर्वत और शेषदिशाओं में उपाधिभेद से तीन समुद्र इस प्रकार चारों सीमाओं का जो स्वामी हो और जो चक्ररत्नरूप आयुध से वर्त्तता हो, वह चातुरन्तचक्रवर्त्ती (षट्खंड का स्वामी) कहलाता है। वह अन्य राजाओं की अपेक्षा धर्म अर्थात् न्याय में उत्कृष्ट होता है, अतः वह भी 'धर्मवर' कहा जा सकता है। प्राणातिपात आदि का त्याग और दान शील आदि को धर्म कहते हैं।

इस तरह जो धर्मवर हो और चातुरन्तचक्रवर्त्ती हो, वह धर्मवरचातुरन्तचक्रवर्त्ती है।

अथवा-वर (श्रेष्ठ) चातुरन्तरूप चक्र को वरचातुरन्तचक्र कहते है। धर्म वरचातुरन्तचक्र के समान है। उससे जो वर्त्ताव करता है, वह धर्मवरचातुरन्तचक्रवर्त्ती कहलाता हैं।

मरीचि आगे कहता है जो चक्ररूप श्रेष्ठ शस्त्र के धारक हैं, जो एकच्छत्र और समुद्र पर्यन्त पृथ्वी पर शासन करते हैं, जिनका भंडार नैसर्प आदि नौ निधियों से समृद्ध है और जो समस्त प्रजा को परि-

જે 'ધર્મ' અનંત અપેક્ષાવાદી અને નયવાદી હોય તેમ જ સઘળા ધર્મો તેમા અપેક્ષાપૂર્વક સમાઈ જતા હોય તે 'સ્યાદ્વાદપણું' ને 'ધર્મ' કહેવામા આવે છે અને ભગવાને આ અપેક્ષાયુક્ત ધર્મની ઘોષણા કરી છે; માટે તેમને 'ધર્મવરચાતુરન્તચક્રવર્ત્તી' કહ્યાં છે.

છખંડ પૃથ્વી પર જેનુ શાસન ચાલતું હોય, જેના ખજાનામા નવે નિધિ હાજર હોય, જેને સર્વ દુશ્મ-

समृद्धकोश —नवनिधयः=नैसर्पादयः, तैः समृद्धः=समृद्धियुक्तः कोशो यस्य सः, तथा-कृतसकलजनतोषः—कृत सकलानां जनानां तोषो येन स —मजारञ्जक इत्यर्थः, एवंविधः षट्खण्डाधिपतिर्नरसिंहः=नरेषु सिंह इव भरत चक्रवर्ती मम पिताऽस्ति २। अहं पुनरत्र भारते वर्षे पोतनपुरे भाविकाले शत्रुमर्दनः=शत्रुविनाशकः, सिंह गर्जनः—सिंहस्य गर्जनमिव गर्जनं यस्य स तथा—अविक्रान्ताशेषपुरुषबल इत्यर्थः, अत एव—महाबलः—महद् बलं यस्य स तथा—महाबलशाली, तथा—प्रियदर्शन —प्रियं दर्शनं यस्य स तथा—अत्यन्तसुन्दरः, विमलकुलसंभूतः= निर्दोषकुले समुत्पन्नः, अजितः=शत्रूणामजेयो, राजकुलतिलकः=राजसमुदायशिरोलङ्कामभूतः, श्रीवत्सलाञ्छनः श्रीवत्सः=स्वस्तिकेतिनाम्ना प्रसिद्धः, स एव लाञ्छनं=चिह्नं यस्य स तथा—श्रीवत्सविभूषितवक्षस्थल इत्यर्थं, तथा—त्रिखण्डाधिपतिः=दक्षिणभरतस्वामी, पुरुषोत्तम —पुरुषेषु उत्तम —पुरुषश्रेष्ठः, त्रिपृष्ठनामा प्रथमो वासुदेवो भविष्यामि ३। पुनश्च—अपरविदेहे मूकायां नगर्यां तेजसा=कोशदण्डादिजनितप्रभावेण प्रचण्डमार्तण्डप्रतापः— प्रचण्डः=अतितीक्ष्णो यो मार्तण्डः=सूर्य, तस्य प्रताप इव प्रतापो यस्य स तथा—प्रखरसूर्यसदृशप्रताप इत्यर्थः,

---

तोष देने वाले हैं, ऐसे मनुष्यों में सिंह के समान भरत चक्रवर्ती मेरे पिता हैं।'

'और मैं भरतक्षेत्र के पोतनपुर में, आगामी कालमें, शत्रुओं का संहार करने वाला, सिंह के समान गर्जना करने वाला, अत्यन्त बलवान्, महाबलशाली देखने में प्रिय—अत्यन्त सुन्दर, निर्मलकुल में उत्पन्न, शत्रुओं द्वारा अजेय, राजाओं के समूह में मुकुट—मणि के समान, श्रीवत्स—स्वस्तिक के चिह्नवाला अर्थात् स्वस्तिक के चिह्न से सुशोभित वक्षस्थलवाला, तीन खण्ड अर्थात् सम्पूर्ण दक्षिणभरत का स्वामी और पुरुषों में उत्तम त्रिपृष्ठ नामक वासुदेव होऊँगा।'

'यही नहीं, उसके पश्चात् मैं चक्रवर्ती भी होऊँगा। कोश और दण्ड आदि के प्रभाव से मेरा प्रताप अत्यन्त प्रखर सूर्य के प्रतापके समान होगा। पूर्व जन्म में किए हुए तप का प्रभाव मुझे प्राप्त

---

તોને નાશ કરવાવાળુ ચક્ર મળ્યુ હોય, છએ ખંડ આધિપત્યે પ્રાપ્ત કર્યા હોય. વિદ્યાધરોએ જેને નરક સુધી જરા પણ પ્રભાવ નહિ તેમ જ જીવન પર્યન્ત યુવાવસ્થા, લાવણ્યતા સાથે ટકી શકે તેવું સ્ત્રીરત્ન આપ્યુ હોય તે જ 'ચક્રવર્તી' કહેવાય એવા ચક્રવર્તી મારા પિતા છે

હવે હું પોતનપુરમાં સિંહ સમાન ગર્જના વાળો મહાબળી સુંદર સ્વસ્તિક ચિહ્નવાળો ત્રણ ખંડનો અધિપતિ ત્રિપૃષ્ઠ નામના વાસુદેવ થઈશ. આટલુ જ નહિ ત્યાર બાદ હું અપર વિદેહની મૂકા નગરીમાં ચક્રવર્તી

तथा- पूर्वकृततपःप्रभावः-पूर्वकृतं=पूर्वजन्मनि विहितं यत्तपः, तस्य प्रभावो यस्य स तथा-जन्मान्तरीयतपस्तेजः-सम्पन्न इत्यर्थः, तथा-निर्विष्टसंचितसुखः-निर्विष्टं=लब्धं संचितं=पूर्वजन्मसु संचयीकृतं सुखं येन स तथा-पूर्वजन्मसंचितसुखभासिकर्चेत्यर्थः, तथा-नरवृषभः=नरश्रेष्ठः, विपुलविश्रुतयशाः-विपुलं=दिगन्तव्यापि विश्रुतं=प्रसिद्धं यशो यस्य स तथा-दिगन्तव्याप्तकीर्तिसम्पन्न इत्यर्थः, तथा-शारदनभस्तनितमधुरगम्भीरस्निग्धघोषः- शारदं=शरत्कालिकं यद् नभः=मेघस्तस्य यत् स्तनितं=गर्जितं, तदिव मधुरो गम्भीरः स्निग्धो घोषः=शब्दो यस्य स तथा, शरत्कालिकमेघगर्जितसदृशमधुरगम्भीरस्निग्धध्वनियुक्त इत्यर्थः, सम्प्राप्तसकलजनमनस्तोषः-सम्प्राप्तः सकलजनाना मनसा कर्तृभूतेन तोषः=सन्तोषो यस्मात् स तथा-अखिलजनमनःसन्तोषकारक इत्यर्थः, एवंविधः पितृसदृशः प्रियमित्रो नाम चक्रवर्ती भविष्यामि ४। किं बहुना ? अत्र भारते वर्षेऽस्यामेव अवसर्पिण्याम् पुरुषसिंहः-पुरुषेषु सिंहो रागद्वेषादिशत्रुपराजये दृष्टाद्भुतपराक्रमत्वात्, यद्वा-पुरुषः सिंह इवेत्युपमितिसमासः, सिंहसदृशपराक्रमशाली, तथा-पुरुषवरपुण्डरीकं-पुण्डरीकं=श्वेतकमलं वरं च तत् पुण्डरीकं वरपुण्डरीकं=श्वेत-

होगा। मैं पूर्वजन्म में संचित सुखों को प्राप्त करूँगा। मनुष्यों में उत्तम गिना जाऊँगा। दिग्-दिगन्त में मेरा यश फैलेगा। शरत्कालीन नवमेघगर्जना के समान मधुर, गंभीर और स्निग्ध मेरी ध्वनि होगी। सब लोगों को मुझसे सन्तोष प्राप्त होगा। मैं अपने पिता के समान ही प्रियमित्र नामक चक्रवर्त्ती बनूँगा।

अधिक क्या, इसी भारतवर्ष में, इसी अवसर्पिणी काल में चरमतीर्थंकर बनूँगा। तब मैं राग-द्वेष आदि शत्रुओं का पराजय करने में अद्भुत पराक्रमी होने के कारण पुरुषों में सिंह के समान, तथा पुरुषों में श्रेष्ठ श्वेत कमल के समान हो जाऊँगा। सब प्रकार की अशुभ-मलीनता से रहित होने के कारण तथा सब प्रकार के शुभ अनुभावों से विशुद्ध होने के कारण भगवान् तीर्थंकर को पुण्डरीक की उपमा दी जाती है। अथवा जैसे पुण्डरीक पंक से पैदा होने पर भी और जल में वृद्धि पाने पर भी पंक और जल

પણ થઇશ કોશ અને દંડ આદિના પ્રભાવથી મારો પ્રતાપ અત્યંત પ્રખર સૂર્યના પ્રતાપની સમાન થશે. પૂર્વભવમા કીધેલ તપનો પ્રભાવ મને પ્રાપ્ત થશે હુ પૂર્વજન્મના સંચિત સુખોને પ્રાપ્ત કરીશ. મનુષ્યોમા ઉત્તમ ગણાઇશ. દશે દિશાઓમા મારો યશ ફેલાશે. શરત્કાલના મેઘની સમાન મધુર ગંભીર અને સ્નિગ્ધ મારી ધ્વનિ થશે બધા લોકોને મારાથી સંતોષ પ્રાપ્ત થશે. હું પોતાના પિતાની સમાન જ પ્રિયમિત્ર નામનો ચક્રવર્તી બનીશ

વધારે શું ! આ જ ભરત ક્ષેત્રમાં, આ જ અવસર્પિણી કાલમાં, રાગદ્વેષ રહિત શુભ અશુભ મલિનતાઓ સિવા-

कमसमभानं, पुरुषो वरपुण्डरीकमिवेत्युपमितिसमास पुरुषवरपुण्डरीकम् । भगवतस्तीर्थंकरस्य पुण्डरीकोपमा विनिर्मलताऽशुभमलीमसत्वात् सर्वैः शुभानुभावे परिशुद्धत्वाच्च योग्या । यथा-पुण्डरीकं पङ्काज्जातमपि सलिले वर्द्धितमपि च पङ्कजलसम्बन्धमपहाय निर्लेपमिव जलोपरि रमणीय दृश्यते, निजानुपमगुणबलेन सुरासुरनिकरशिरोधारणीयतयाऽतिसहनीय परमसुखास्पदं च भवति, तथैव तीर्थंकरः कर्मपङ्काज्जातो भोगाम्भोवर्द्धित मपि निर्लेपत्वमुभयमतिवर्त्तते, गुणसम्पदास्पदतया च केवलादिगुणभावनन्निखिलभव्यजनशिरोधारणीयो भवतीति । तथा विमलकुलसंभव=निर्मलकुलोत्पन्नः, महासत्त्वः-महत् सत्त्व=बल यस्य स तथा-महाबलशालीत्यर्थः । तथा-सागरवरगम्भीरः-सागरवरः=सकलसमुद्रेषु श्रेष्ठः स्वयम्भूरमणनामा समुद्रः, तद्वद् गम्भीरः=परीषहोपसर्गाद्यक्षोभ्यत्वादिति । तथा-चन्द्रादपि=चाम्बितालिलकर्ममलत्वाच्चन्द्रापेक्षयाऽपि निर्मलतरः=अतिशयितनैर्मल्यभाक्, तथा-सूर्यादप्यधिकप्रकाशकरः = मिथ्यात्वादितिमिरविनाशकात्युत्कृष्टकेवलाऽऽलोकेनाखिललोकालोकप्रकाशकत्वेनाऽऽदित्यादप्यधिकप्रकाशकरः । एवंविधोऽहं नाम्ना महावीरश्चरमस्तीर्थंकरो भविष्यामि । अहो ! मम

से उत्पन्न होकर अलिप्त-सा जल के ऊपर रहता और रमणीय दिखाई देता है तथा अपने असाधारणगुण के कारण सुर-असुर आदि के सिर पर धरने योग्य होने के कारण अत्यन्त आदरणीय और परमसुखदायी होता है, उसी प्रकार तीर्थंकर कर्मरूपी कीचड़ से उत्पन्न हुए और भोगरूपी जल में वृद्धि को प्राप्त करके भी अलिप्त रहकर कर्मों और भोगों का अतिक्रमण करके रहते हैं तथा गुणों की सम्पदा के पात्र केवलज्ञान आदि गुणों के आधार होने से भव्य जीवों के शिरोवन्दनीय होते हैं।

मरीचि फिर सोचता है-'मैं निर्मल कुल में जन्म लूँगा । महाबलशाली होऊँगा । सागरवरगंभीर अर्थात् परीषहों और उपसर्गों आदि से क्षुब्ध न होने के कारण स्वयंभूरमण समुद्र के समान गंभीर होऊँगा। निखिल कर्म-मल को धो डालने के कारण चन्द्रमा से भी अधिक निर्मल तथा मिथ्यात्व आदि रूप अन्धकार का विनाश करने के कारण तथा केवलज्ञानरूपी आलोक से अखिल लोक एवं अलोक को आलोकित कर देने के कारण सूर्य से भी अधिक प्रकाशकारी होऊँगा । मैं इन सब गुणों से विभूषित महावीर नामक चौवीसवाँ तीर्थंकर होऊँगा।'

बनो अद्भुत आत्मपराक्रमी महान बलवान् केवल-ज्ञान-दर्शन उपयोगवाळो चरम तीर्थंकर पण थईश. सर्व तीर्थंकरोमां मारा दादा प्रथम तीर्थंकर छे सर्व चक्रवर्तीओमां मारा पिता प्रथम चक्रवर्ती छे अने

पितामहस्तीर्थंकरेषु=तीर्थंकराणा मध्ये प्रथमस्तीर्थंकरोऽस्ति, मम तातः=पिता चक्रवर्त्तिषु प्रथमोऽस्ति। अहं पुन र्वासुदेवेषु प्रथमो वासुदेवो भविष्यामि, पुनश्च=वासुदेवभवानन्तर कालक्रमेण चाहम् अस्यामेवासर्पिण्याम् अपरविदेहे मूकायां नगर्यां षट्खण्डाधिपतिर्जगत्प्रियः=जगदानन्दकरः प्रियमित्रो नाम चक्रवर्त्ती भविष्यामि, पुनश्च कालक्रमेण अस्यां चतुर्विंशतिकायाम्=अस्मिन् चतुर्विंशतितीर्थंकराणा समूहे चतुर्विंशतिसंख्यापूरकः=चतुर्विंशतितमः चरमः=अन्तिमस्तीर्थंकरो भविष्यामि, इति=इत्थं वदन्, भुजास्फालनपूर्वकं=भुजयोः=बाह्वोर्यत् आस्फालनम्=आस्फोटनं, तत्पूर्वं यस्मिन् स तथाभूतस्तम्, उच्चनादं=महाशब्दं कुर्वन्, तथा-पुनः पुनः=वारं वारं नृत्यन्=नृत्यं कुर्वन् स मरीचिः नीचं गोत्रम् उपार्जयति=बध्नाति। नात्र चित्रम्, यत् ऋषभप्रभोः पौत्रो भरतचक्रवर्त्तिनः पुत्रः स्वयं जिनधर्मनिष्ठोऽपि सन् मरीचिर्नीचं गोत्रं बद्धवान्। यतो हेयोपादेयविवेकविकलः=परित्याज्यस्वीकार्य-

---

'अहा! मेरे पितामह सब तीर्थंकरों में प्रथम तीर्थंकर हैं, मेरे पिता सब चक्रवर्त्तियों में प्रथम चक्रवर्त्ती और मैं वासुदेवों में प्रथम वासुदेव होऊँगा! इसके पश्चात् मैं पश्चिम महाविदेहकी मूका नगरी में छह खण्ड का नाथ, जगत् में आनन्द करनेवाला प्रियमित्र नामक चक्रवर्त्ती होऊँगा! इतना ही नहीं, इसके पश्चात् मैं कालक्रम से इसी चौवीसी की पूर्त्ति करने वाला-चौवीसवीं संख्या को पूण करने वाला-अन्तिम तीर्थंकर होऊँगा।'

इस प्रकार कहता हुआ और बाहें फटकारता हूआ तथा जोर-जोर से सिंहनाद करता हुआ मरीचि ने नीचगोत्र का उपार्जन किया। भगवान् ऋषभदेव का पौत्र, चक्रवर्त्ती भरत का पुत्र और स्वय जिनधर्म में निष्ठ होकर भी मरीचि ने नीचगोत्रकर्म का बन्ध कर लिया, इसमें विस्मय की कोई बात नहीं है। क्यों कि जो मनुष्य हेय और उपादेय के विवेक से विकल होता है, वह वास्तविक बातका

---

હું વાસુદેવોમાં પ્રથમ વાસુદેવ બનીશ. આ પછી હું પશ્ચિમ મહાવિદેહની મૂકા નગરીમાં છ ખંડનો નાથ, જગતમાં આનંદ કરવાવાળો પ્રિયમિત્ર નામનો ચક્રવર્તી થઇશ. આટલું જ નહિ, પણ ત્યાર પછી હું કાલક્રમથી આ જ ચોવીસીની પૂર્તિ કરવાવાળો એટલે ચોવીસમી સંખ્યાને પૂર્ણ કરવાવાળો ચરમ તીર્થંકર થઇશ.

આ પ્રમાણે કહેતા, તથા ભુજાઓ ફટકારતા, તથા જોર જોરથી સિંહનાદ કરતા એવા મરીચિએ નીચ ગોત્રનું ઉપાર્જન કર્યું. ભગવાન ઋષભદેવનો પૌત્ર, ચક્રવર્તી ભરતનો પુત્ર અને પોતે જૈન ધર્મમાં નિષ્ઠા ધરાવનાર હોવા છતાં પણ મરીચિએ નીચગોત્રકર્મનો બંધ બાંધી લીધો. એમાં આશ્ચર્યની કોઇ વાત નથી. કારણ કે જે

परिज्ञानरहिता जनः तत्त्वं=वास्तविकमर्थं न विनिश्चिनोति, तथा—अभिमानविषमविषज्वालज्वलिते—अभिमानः=जातिकुलाद्यहङ्कारः, स एव विषमविषम्=अत्युत्कटविषम्, तस्य ज्वालेन=ज्वालया ज्वलिते=दग्धे, मनस्तरौ=मनोरूपे वृक्षे ज्ञानपल्लवः=ज्ञानरूपम् अभिनवं पर्णं न प्ररोहति=न समुत्पद्यते। अभिमानो ज्ञानस्य सर्वथा विनाशक इत्यर्थः। पुनरप्यभिमानस्य दुष्फलत्वमाह—जीवानां मनोगगनाङ्गणे—मन एव गगन—मनोगगनं तस्य अङ्गणे=क्षेत्रे मनागपि=किञ्चिदपि मानमेघे=मानरूपे मेघे समुद्गते=समुत्पन्ने सति हृदयभूमौ तृष्णा विषलता सद्यः=तत्क्षणे प्ररोहति=प्रादुर्भवति। मानस्तृष्णाजनक इत्यर्थः। सा तृष्णा च हिमराजिः=हिमसंहतिः राजीवराजिमिव=कमलवनमिव ज्ञानादिगुणश्रेणिं अभिहन्ति=विनाशयति। यथा हिमसमूहेन कमलवनविनाशस्तथैव मानेन ज्ञानादिगुणानां नाशो भवतीति भावः। तथा—सा तृष्णा मदिरेव=सुरेव दुस्त्यजमोहसन्दोहजननी—दुस्त्यजो यो

---

निश्चय नहीं करता—नहीं कर सकता। जाति कुल आदि का अभिमान बड़ा ही उग्र विष है। जब मनरूपी वृक्ष उस अभिमानकी ज्वाला से जल जाता है तो उस मनरूपी वृक्ष में ज्ञानकी कोपलें नहीं फूट सकतीं। अभिप्राय यह है कि अभिमान ज्ञान का पूरी तरह से नाश कर देता है।

अभिमान का दुष्फल फिर बतलाते हैं—जीवों के मनो—गगनरूप आंगन में अर्थात् हृदयरूपी क्षेत्र में लेशमात्र भी मानरूपी मेघ का उदय होता है तो उस हृदय—क्षेत्र में तत्काल ही तृष्णारूपी विष की बेल उग आती है। अर्थात् मान तृष्णा का जनक है। यह तृष्णा ज्ञानादि गुणों के समुदाय को उसी प्रकार समूल नष्ट कर देती है, जैसे हिम—समूह कमल—वनको नष्ट कर देता है। आशय यह है कि जैसे हिम के समूह से कमलों के वन का विनाश होता है, उसी प्रकार मान से ज्ञान आदि गुण—गण का विनाश हो जाता है। इसके अतिरिक्त यह तृष्णा मदिरा की तरह अपरिहार्य मोह के समूह की जननी है

---

માણસ દેવ અને ઉપાદેયના વિવેકથી વિકલ હોય છે તે વાસ્તવિક વાતનો નિર્ણય કરતો નથી, કરી શકતો નથી જાતિ, કુલ વગેરેનુ અભિમાન ભારે ઉગ્ર વિષ છે. જ્યારે મનરૂપી વૃક્ષ એ અભિમાનની જ્વાળાથી બળવા લાગે છે ત્યારે એ મનરૂપી વૃક્ષમાં જ્ઞાનની કુંપળો ફૂટી શકતી નથી. તેનો સાર એ છે કે અભિમાન જ્ઞાનનો પૂરેપૂરી રીતે નાશ કરી નાખે છે

અભિમાનનુ ખરાબ પરિણામ ફરીથી બતાવે છે:—જીવોના મનોગગન રૂપી આંગણામાં એટલે કે હૃદયરૂપી ક્ષેત્રમાં લેશ માત્ર અભિમાનરૂપી મેઘનો ઉદય થાય તો તે હૃદય ક્ષેત્રમાં તરત જ તૃષ્ણારૂપી વિષની

मोहसन्दोहः=मोहसमूहः, तस्य जननी=उत्पादिका, दुष्पारसंसारविस्तारिणी—दुष्पारः=दुरुत्तरो यः संसारः= चतुर्गतिकरूपः, तस्य विस्तारिणी च भवति। यथा मदिरापानेन जनो मोहसम्पन्नश्चतुर्गतिकसंसारभ्रमणकर्त्ता च भवति तथैव तृष्णयाऽपीति भावः। एवम्=ईदृशम् अभिमानं=कुलमदम् आश्रितो मरीचिः विस्मृतविवेकः= हेयोपादेयविवेकवर्जितः सन् वागुरिकः—वागुरा=जालं, तया चरतीति वागुरिकः—लुब्धकविशेषो जाले विहङ्गमं= पक्षिणमिव दुःखसवे=दुःखजनके भवे=संसारे स्वयम् आत्मानम् अपातयत्=पातितवान्—इत्येवम् अनर्थनिधानम् चतुर्गतिकसंसारभ्रमणरूपानर्थानां निधिस्वरूपं विशालकुलजन्ममदम्=उच्चकुलजन्मरूपं मदम् आश्रयन् स मरीचिस्तदा= भरतमुखात् स्वस्य भाविवासुदेवत्वादिश्रवणसमये नीचगोत्रम् अवध्नात्=बद्धवानिति ॥सू०१२॥

---

और अपार संसार की वृद्धि करती है। अभिप्राय यह कि जैसे मदिरापान से मनुष्य मोहयुक्त और चार गति रूप संसार में परिभ्रमण करने वाला वनता है, उसी प्रकार तृष्णा से भी।

इस प्रकार के कुल-मद का आश्रय लेकर हेय-उपादेय के विवेक से शून्य मरीचि ने अपनी आत्मा को दुःख-जनक संसार में उसी प्रकार फँसा लिया, जैसे व्याध अपने जाल में पक्षियों को फँसा लेता है। इस प्रकार चातुर्गतिक संसार-भ्रमण आदि अनर्थों का निधिरूप उच्चकुल में जन्म लेने के मद का आश्रय लेते हुए मरीचिने भरत के मुख से भविष्य में अपने वासुदेव आदि होने की वात सुनने के समय ही नीचगोत्र का वन्ध कर लिया ॥सू०१२॥

---

વેલ ઉગી નીકળે છે. એટલે કે અભિમાન તૃષ્ણાનો જનક છે. જેવી રીતે હિમસમૂહ કમલવનનો નાશ કરી નાખે છે તેવી રીતે તે તૃષ્ણા જ્ઞાનાદિગુણોના સમુદાયને મૂળમાંથી જ નાશ કરી નાખે છે તેનો આશય એ છે કે જેવી રીતે હિમના સમૂહથી કમળોના વનનો નાશ થાય છે તેવી જ રીતે અભિમાનથી જ્ઞાન વગેરે ગુણ-સમૂહનો નાશ થાય છે તદુપરાંત તે તૃષ્ણા મદિરાની જેમ અપરિહાર્ય મોહના સમૂહની જનની છે, અને અપાર સંસારની વૃદ્ધિ કરનાર છે. સારાંશ એ છે કે જેમ સુરાપાન કરવાથી મનુષ્ય મોહમય તથા ચાર ગતિરૂપ સંસારમાં ભ્રમણ કરનાર બને છે તે જ પ્રમાણે તૃષ્ણાથી પણ બને છે

આ રીતે કુલ-મદનો આશ્રય લઈને હેય-ઉપાદેયના વિવેક રહિત મરીચિએ પોતાના આત્માને દુ ખ-જનક સંસારમાં એવી રીતે ફસાવ્યા કે જેવી રીતે પારધી પોતાની જાળમાં પક્ષીઓને ફસાવી લે છે આ રીતે ચાર ગતિ-રૂપ સંસાર-ભ્રમણ વગેરે અનર્થોના ભંડારરૂપ ઉચ્ચ કુળમાં જન્મ લેવાના અભિમાનનો આશ્રય લઈને મરીચિએ ભરતના મુખથી ભવિષ્યમાં પોતે વાસુદેવ વગેરે થશે, એવી વાત સાંભળવાને સમયે જ નીચ ગોત્રનો બંધ બાંધ્યો. (સૂ૦૧૨)

बद्धनीचगोत्रस्य मरीचे किमभूत्? इति प्रतिपादयितुमाह-

मूलम्—तए णं से मरीई उसभसामिम्मि मोक्खं गए समाणे भवियजणे पुणो पुणो पडिबोहिय पव्वइउं मुणिसमीवे पेसेइ। तए णं एगया तस्स मरीइस्स सरीरे काससासाइया सोलस रोगायंका पाउब्भविंसु। तेण गिलाणिभाओ सो मणम्मि चिंतेइ—जइ अहं णाहिमुचो भविस्सामि, तया कंपि एगं सिस्सं करिस्सामि, जो मं परिचरिस्सइ।

एवं चिंतियमाणस्स तस्स अंतिए एगो धम्मकामी कविलनामो कुलपुत्तो समागओ। तं मरीई जिणधम्मं धम्मिय उवदेसीय। तं सोच्चा कविलो पुच्छीय—जइ जिणधम्मो सव्वुत्तमो, ताहे तं तुमं कम्हा नो समायरसि? तए णं मरीई एवं वयासी—कविला! आरहयं धम्मं पालिउं न सक्केमि कढिणो सो धम्मो, न तं मारिसा कायरा परिपालिउं सक्कंति। तए णं कविलो कहीय—किं तव मग्गे धम्मो नत्थि? जं तुम मं जिणधम्मं उवदिससि? एयम्मि पण्हेण मरीई कविलं जिणधम्मकामुयं मुणिय सिस्सलालसाए एवं वयासी—कविला! जहा जिणमग्गे धम्मो अत्थि, एवं मम मग्गेवि धम्मो अत्थि। एवं सोच्चा सो मरीइस्स सिस्सो संजाओ। तए य 'जिणमग्गेवि धम्मो अत्थि मम मग्गेवि धम्मो अत्थि'—त्ति उस्सुत्तपरूवणस्स मिच्छाधम्मोवएसस्स य अणालोइओ अप्पडिक्कंतो य सो मरीई बहुलं संसारं उवज्जिणिय चउरासीसयसहस्सपुव्वाउय परिपालिय अणसणेण कालमासे कालं किच्चा चउत्थे भवे पंचमदेवलोए दससागरोवमट्ठिइयदेवत्ताए उववन्नो ॥सू०१३॥

छाया—ततः खलु स मरीचिः ऋषभस्वामिनि मोक्षं गते सति भव्यजनान् पुनः पुनः प्रतिबोध्य प्रव्रज्याय मुनिसमीपे प्रेषयति। ततः खलु एकदा तस्य मरीचेः शरीरे कासश्वासादिकाः षोडश रोगातङ्काः प्रादुरभूवन्।

---

नीचगोत्र का बन्ध कर लेनेवाले मरीचिका क्या हुआ? यह प्रतिपादन करनेके लिए कहते हैं—'तए णं से' इत्यादि।

मूलका अर्थ—तत्पश्चात् ऋषभस्वामी के मोक्ष चले जाने पर मरीचि भव्यजनोंको पुनः पुनः प्रतिबोध देकर दीक्षा के लिए उन मुनियोंके समीप भेजता रहा। किसी समय मरीचि के शरीर में कास (खांसी) १, श्वास २, ज्वर ३, दाह ४, कुक्षिशूल ५, भगन्दर ६, अर्श—बवासीर ७, अजीर्ण ८,

---

નીચ ગોત્ર બાંધ્યા પછી મરીચિનું શું થયું? તે કહે છે- 'तए णं' ઇત્યાદિ

મૂળનો અર્થ—ઋષભદેવ ભગવાન મોક્ષ પધાર્યા બાદ પણ મરીચિ ભવ્યજીવોને પ્રતિબોધ આપીને વારંવાર દીક્ષાને માટે ભગવાનના સાધુઓ પાસે મોકલતો. કોઈ એકવેળા મરીચિના શરીરમાં ખાંસી ૧ શ્વાસ

तेन ग्लानिमापन्नः स मनसि चिन्तयति-यद्यहं व्याधिमुक्तो भविष्यामि, तदा कमप्येकं शिष्यं करिष्यामि, यो मां परिचरिष्यति।

एवं विचिन्तयतस्तस्य अन्तिके एको धर्मकामी कपिलनामा कुलपुत्रः समागतः। तं मरीचिर्जिन-धर्मं वर्णयित्वा उपादिशत्। तं श्रुत्वा कपिलोऽपृच्छत्-यदि जिनधर्मः सर्वोत्तमः, तदा तं त्वं कस्मान्न समाचरसि? ततः खलु मरीचिस्तमवदत्-कपिल! अहम् आर्हतं धर्मं पालयितुं न शक्नोमि, कठिनः स धर्मः, न तं मादृशाः कातराः परिपालयितुं शक्नुवन्ति। ततः कपिलोऽकथयत्-किं तव मार्गे धर्मो नास्ति. यत्त्वं मां

---

दृष्टिशूल ९, मस्तकशूल १०, अरुचि ११, अक्षिवेदना १२, कर्णवेदना १३, कंठवेदना १४, उदरवेदना १५. कोढ १६, ये सोलह रोग-आतंक उत्पन्न हो गये। इस प्रकार ग्लानि को प्राप्त हुए मरीचि ने चित्तमें विचार किया अगर मैं व्याधि से मुक्त हो जाऊँगा तो किसी एकको अपना शिष्य बनाऊँगा जो मेरी सेवा करेगा।

इस प्रकार सोचते हुए मरीचि के पास एक धर्म का अभिलाषी कपिल नामक कुलपुत्र आगया। मरीचि ने जिनधर्म का वर्णन करके उसे उपदेश दिया। उपदेश सुनकर कपिल ने प्रश्न किया— 'अगर जिनधर्म सर्वोत्तम है तो तुम उसका आचरण क्यों नहीं करते?'

तब मरीचि इस प्रकार बोला-हे कपिल! मैं आर्हत धर्मका पालन नहीं कर सकता। वह धर्म कठिन है। मेरे जैसे कायर उसका पालन नहीं कर सकते।

---

-દમ ૨, જ્વર ૩, દાહ ૪, કુક્ષિશૂલ ૫. ભગંદર ૬, હરસ-મસા ૭, અજીર્ણ ૮, નેત્રરોગ ૯, મસ્તકવેદના ૧૦, અરુચિ ૧૧, આંખની વેદના ૧૨, કાનની વેદના ૧૩, કંઠની વેદના ૧૪, ઉદર-પેટની વેદના ૧૫, કોઢ૧૬ આ સોલે રોગ ફાટી નીકળ્યાં, આથી તેમના મનમા વિચાર આવ્યો કે વ્યાધિથી મુક્ત થયા બાદ કોઇએક ને શિષ્ય બનાવુ તો ઠીક! જે મારી સેવા-ચાકરી કરે ને વૃદ્ધાવસ્થામાં સાર-સભાળ રાખે.

આ પ્રકારે વિચારતો હતો તેવા સમયમાં કોઇ એક ધર્મ-અભિલાષી કપિલ નામનો પુરુષ આવી ચઢયો. મરીચિએ તેને જૈનધર્મનું યથાર્થ વર્ણન કરી તેની સાર્થકતા સમજાવી. ઉપદેશ સાભળી કપિલે પ્રશ્ન કર્યો, કે જો જૈનધર્મ સર્વોત્તમ છે, તો તેનુ આચરણ તમે કેમ નથી કરતા? જવાબમાં મરીચિએ કહ્યું, કે હે કપિલ! આર્હત ધર્મનું ઉપદેશેલું આચરણ મારાથી અમલમા મૂકી શકાતુ નથી, તે આચરણ ઘણું કઠિન છે ને મારી કાયરતાને લીધે તેમ બની શકાતું નથી. ત્યારે કપિલે બીજો પ્રશ્ન કર્યો કે શું તમારા પથમા 'ધર્મ' નથી કે તમારે જૈન-

खित्रत भक्तानि अनशनेन छेदयित्वा शुभेन ध्यानेन कालमासे कालं कृत्वा उत्कर्षतोऽष्टादशसागरोपमस्थितिके सहस्रारामिधेऽष्टमे देवलोके उत्कृष्टस्थितिक एकावतारो देवो जातः। महाविदेहे स सेत्स्यति ॥ सू०८६ ॥

टीका—'तए णं से चंडकोसिए' इत्यादि ततः=श्रीवीरप्रभो कायोत्सर्गपुरस्सरस्थित्यनन्तरं खलु सः=दृष्टिविषः, चण्डकौशिकः=तन्नामा विषधरः=सर्पः, क्रुद्धः=क्रोधयुक्तः सन् बिलाद् बहिः=बहि प्रदेशे निस्सृत्य=निर्गत्य कायोत्सर्गस्थितं प्रभुं श्रीवीरस्वामिनं, दृष्ट्वा अचिन्तयत्=चिन्तितवान्-कीदृशः=कथम्भूत अयम्=एष मम बिलनिकट स्थितः, मृत्युभयविप्रमुक्त -मृत्योरपि निर्भय मनुष्यो=मानवोऽस्ति, योऽय स्थाणुरिव स्थिरत्वेन=निभम-

करके और हिंसक प्रकृति का त्याग करके शान्तस्वभाव हो गया। तत्पश्चात् वह सर्प अनशन से तीस भक्त छेदन करके अर्थात् पन्द्रह दिनों का अनशन करके, शुभध्यान के साथ, कालमास में काल करके, अठारह सागरोपम की उत्कृष्ट स्थिति वाले सहस्रार नामक आठवें स्वर्ग में उत्कृष्ट स्थिति वाला और एकावतारी देव हुआ। वह महाविदेह क्षेत्र में सिद्धि प्राप्त करेगा ॥सू०८६॥

टीका का अर्थ—वीर भगवान् के कायोत्सर्ग में स्थित हो जाने के पश्चात् दृष्टिविष चण्डकौशिक नामक सर्प क्रोध से युक्त होकर अपने बिल से बाहर निकला। बाहर निकल कर कायोत्सर्ग में स्थित प्रभु को देख कर वह विचार करने लगा—यह मृत्यु के भय से रहित मनुष्य कैसा है जो मेरे बिल के समीप

આ ગતિને હું પામ્યો છું આ વિચારને પરિણામે તેને વારંવાર પશ્ચાત્તાપ થયો અને હિંસામય પ્રવૃત્તિનો ત્યાગ કરી શાંત સ્વભાવી બની ગયો. શાંત સ્વભાવી થતાં તેણે પંદર દિવસનું અણશણ આદર્યું શુભધ્યાનમાં રહી પૂર્વના પાપોનો હૃદયપૂર્વક પશ્ચાત્તાપ કરતો પાપોને સંભારીને વારં કરી તેની આલોચના કરતાં કાળ કરી ગયો-મરણ પામ્યો.

અહીંથી મરી તે અઢાર સાગરોપમની ઉત્કૃષ્ટ સ્થિતિવાળા સહસ્રાર નામના આઠમા દેવલોકમાં, ઉત્કૃષ્ટ સ્થિતિવાળો એકાવતારી દેવ થયો. ત્યાંથી ચ્યવી મહાવિદેહક્ષેત્રમાં ઉત્પન્ન થઈ કર્મનો સર્વથા ક્ષય કરી સિદ્ધગતિને પ્રાપ્ત કરશે. (સૂ૦૮૬)

ટીકાનો અર્થ—"પ્રાણ અને પ્રકૃતિ સાથે જ જાય" એ કહેવત ખોટી નથી. ગમે તેટલો પ્રયત્ન કરવામાં આવે, ગમે તેટલું ગુણગાન થાય પણ પોતાનો અસલ સ્વભાવ છૂટતો જ નથી તદનુસાર આ સર્પે સઘળો પ્રદેશ સ્મશાન જેવો બનાવી દીધો તો પણ તેનો ક્રોધ શાંત થયો નહિ પશુ સહિત તથા પંખીના કલરવ વિનાનો બની ગયો તો પણ તેને શાંતિ થઈ નહિ અગ્નિમાં જેમ જેમ ઘાસ આદિ નાખતા જઈએ તેમ તેમ અગ્નિ વધારે ને વધારે ભભૂકતો જાય છે તેમ જેમ જેમ ઘાત વેદન થતો ગયો તેમ તેમ તેનો ક્રોધ શાંત થવાને બદલે વધતો જ ગયો. ભગવાનને

त्वेन स्थितोऽस्ति। तिष्ठतु नामैषः किन्तु सम्प्रत्येव=अधुनैव इमं=पुरोवर्तिनम् अहम् विषज्वालया=विषोग्रतेजसा भस्मराशीकरोमि=भस्मपुञ्जीकरोमि, इतिकृत्वा=एतद्विचिन्त्य क्रोधेन=रोषेण धमधमायमानः='धमधमे'=तिशब्दं कुर्वन्, आशुरुप्त=शीघ्रकुपितः 'मिसमिमायमानः'=जाज्वल्यमानो विषाग्निं वमन्=उद्गिरन् फणां विस्तारयन्=विस्तृतां कुर्वन् भयङ्करैः=भीषणैः फुत्कारैः=भयङ्करफुत्कारपूर्वकं दृष्टिं=चक्षुः स्फारयन्=विकाशयन् सूरं=सूर्यं निध्याय=निरीक्ष्य, स्वामिनं=श्रीवीरप्रभुं प्रलोकते=प्रकर्षेण पश्यति, किन्तु विषदृशा प्रलोक्यमानोऽपि सः श्रीवीरस्वामी न दह्यते=न भस्मीभवति, यथा=येन प्रकारेण अन्ये=प्राणिनो भस्मीभवन्ति। एवम्=अनेन प्रकारेण-पूर्ववत् द्विरपि त्रिरपि=द्विवारमपि त्रिवारमपि प्रलोकते, तथापि सः-श्रीवीरस्वामी न दह्यते, तदा स सर्पः पादाङ्गुष्ठे=चरणाङ्गुष्ठाङ्गुल्यवच्छेदेन दशति, दष्ट्वा 'मे उपरि=मम शरीरोपरि अयं मा=न पतेत्-इति कृत्वा=इति विचार्य प्रत्यवष्वष्कते=दूरिभवति, तथापि=पादाङ्गुष्ठे दंशनेनापि प्रभुर्न पतति। एतावदेव न अपिच कायोत्सर्गात्=कायो-

---

खडा है? यह ठूंठ के समान अडिग रूप से खड़ा हुआ है। यह भले खड़ा हो, परन्तु इसको अभी-अभी विष के उग्र तेज से राख का ढेर कर देता हूँ।

इस प्रकार विचार कर चण्डकौशिक रोषवश धमधमाट करने लगा। एकदम कुपित हो गया। क्रोध से जल उठा। विषरूपी अग्नि को निकालने लगा। भयानक फण फैलाकर, नेत्र फाड़ कर और सूर्य की ओर देख कर भगवान् की तरफ देखने लगा। किन्तु विषभरे नेत्रों से देखने पर भी प्रभु भस्म न हुए, जैसे दूसरे प्राणी भस्म हो जाते थे। इसी प्रकार उसने दूसरी बार भी देखा और तीसरी बार भी देखा। फिर भी वीर भगवान् भस्म न हुए। तब उस सर्प ने पैर के अंगूठे में काट खाया। काट कर उसने सोचा-'यह कहीं मेरे शरीर पर न गिर पड़े' अत एव वह दूर सरक गया। मगर अंगूठे में डंसने पर भी भगवान् नहीं गिरे। यही नहीं, किन्तु वे कायोत्सर्ग से लेश मात्र भी चलायमान न हुए। इसी प्रकार

---

માથાના માનવીએ અહીં આવવાની હિંમત કેવી રીતે કરી? તેમાંય પણ ઝાડની માફક સ્થિર થઈને ઉભો રહ્યો છે? આવુ અકલ્પનીય દૃશ્ય જોઇ ઘણો ધમધમી ઉઠયો અને ક્ષણવારમા તે ભગવાનને હતા ન હતા કરી દેવા તૈયાર થયો.

દુષ્ટ માણસ વખત આવ્યે પોતાની દુષ્ટતા બતાવવામા પાછી પાની કરતો નથી, અને તે અંગે તેના સઘળા પ્રયત્નો કરી છૂટે છે તેમ ચંડકોશિકે દૃષ્ટિ, ફેણ, ડંખ, વગેરે ધમપછાડા કર્યા. પણ જેમ જેમ તે ઉપાયો અજમાવતો ગયો તેમ તેમ તેના પ્રયત્નો નિષ્ફળ થવા લાગ્યા. આથી છેવટનું હથિયાર અજમાયશ કરવા સર્વ શક્તિઓને કેન્દ્રિત કરી ભગવાન સામે અતૂટ દૃષ્ટિપાત કર્યો, પરંતુ તેમાં નિષ્ફળતા અનુભવતાં તેનો ક્રોધી સ્વભાવ શાંતપણે પરિણમવા લાગ્યો.

स्पर्शक्रियातः लेशमपि=किञ्चिदपि न चलति। ततः स एवं=पूर्ववत् द्विरपि त्रिरपि=द्विवारमपि त्रिवारमपि दशति, तथापि प्रभुर्नो पतति। तदा सः अमर्षेण=क्रोधेन प्रभुं प्रलोकमानः=प्रपश्यन् आस्ते=तिष्ठति। एवम्=अनेन प्रकारेण शान्तमूर्तं=शान्ताकारम् अतुलकान्तिमन्तं=निरुपमप्रभाऽलंकृतं, सौम्यं=मृदुस्वभावं, सौम्यवदनं=सौम्यमुखं सौम्यदर्पं=मृदुलदर्पं, माधुर्यगुणयुक्तं=मधुरतास्यगुणालंकृतं, क्षमाशीलं=क्षमास्वभावं तं=सर्वोत्कृष्टं भगवन्तं वीरस्वामिनं प्रेक्षमाणस्य=प्रपश्यतः तस्य=चण्डकौशिकस्य सर्पस्य ते=कल्पान्तकालवह्निसदृशे विषमृते=विषपूर्णे अक्षिणी=नेत्रे विध्याते=शान्तिमापन्ने। ततः खलु क्रोधपुञ्जकः=कोपराशिस्वरूप –उग्रक्रोधी सः=चण्डकौशिकः–सर्पः स्तब्धः=कुण्ठित जातः। प्रभोः=श्रीवीरस्वामिनः, शान्तिबलेन=शान्तिप्रभावेण, तस्य=चण्डकौशिकस्य क्रोधः=कोपः शमितः। तस्य=चण्डकौशिकस्य क्रोधज्वालाया उपरि प्रभुणा=श्रीवीरस्वामिना क्षमाजलं=क्षान्तिरूपं जलं सिक्तम्, तेन=क्षमाजलसेचनेन स शान्तः=आकृत्या शान्तियुक्त शान्तस्वभावः=प्रकृत्या च शान्तियुक्तः संजातः।

---

उसने दूसरी बार और तीसरी बार भी डँसा, तथापि प्रभु गिरे नहीं। तत्पश्चात् वह रोष के साथ प्रभु को देखता रहा। शांत आकार वाले, अनुपम कान्ति से मंडित, मृदुस्वभाव वाले, मधुरता से अलंकृत और क्षमाशील भगवान वीर स्वामी को देखते हुए चंडकौशिक सर्प की, प्रलयकाल की आग के समान, विष से परिपूर्ण आँखें बुझ गईं अर्थात् शांत हो गईं। तब क्रोध का पुंज–उग्र क्रोधी चंडकौशिक सर्प कुंठित हो गया। वीर प्रभु की शांति के प्रभाव से उसका क्रोध शांत हो गया। चंडकौशिक की क्रोध–ज्वाला पर भगवान् महावीर ने क्षमा का जल सींच दिया, अर्थात् अपनी क्षमा एवं शांति के प्रभाव से उसके क्रोध को नष्ट कर दिया। क्षमा का जल सींचने से वह आकृति से भी शांत हो गया और प्रकृति से भी शांत हो गया।

---

શાંતિનું સામાન્ય અંતરમાં વ્યાપતાં તેને વિચાર કરવાનો અવસર પ્રાપ્ત થયો. અશાંતિમાં કંઈ વિચાર આવતો નથી, તેમ જ યોગ્ય નિર્ણય પણ થઈ શકતું નથી. શાંતિ અને ક્રોધનો ઉકળો બન્નેનું અનુક્રમે વ્ય સ- પણ અને ઠરી જવું થતા તેની વિચારધારા બદલાઈ આવા પરમ દયાળુ ક્ષમાવંત અને શાંત મુદ્રાવાળા પુરુષને જોઈ તેના અંતરમાં ઠંડક વળી અને માનપૂર્વક દૃષ્ટિએ તેમની તરફ જોઈ રહ્યો અગ્નિ ઠંડા પાણીથી બુઝાય છે, શીત ગરમીથી ચાલી જાય છે, દરેક પદાર્થનો નાશ તેના વિરુદ્ધ ગુણવાળા પદાર્થથી થાય છે એ પ્રકૃતિનો નિયમ છે જગતમાં મુખ્ય બે જાતનાં પ્રવર્ત છે (૧) ક્રોધ–પ્રમાદ પ્રવૃત્તિવાળું હોય છે તેનાથી સમસ્ત જગત પ્રવૃત્તિઓથી ધમધમી રહેલું દેખાય છે જેમ કે ...

एतादृशम्=ईदृशं, शान्तिसम्पन्नं=शान्तिगुणवन्तं चण्डकौशिकं सर्पं दृष्ट्वा प्रभुः=श्रीवीरस्वामी एवम्=अनुपदं वक्ष्यमाणं वचनम् अवादीत्=उक्तवान्–'हे चण्डकौशिक! त्वम् बुध्यस्व बुध्यस्व=बोधं लभस्व बोधं लभस्व, तथा क्रोधं कोपम्, अवमुञ्चावमुञ्च=सर्वथा त्यज, यतः पूर्वभवे क्रोधवशेनैव कालमासे कालं कृत्वा त्वं सर्पः संजातः। पुनरपि=इह भवेऽपि पापं=क्रोधरूपं पापकर्म करोषि=उपार्जयसि तेन=पापकरणेन पुनरपि=आगामिनि भवेऽपि दुर्गतिं=नरकादिगर्हितगतिं प्राप्स्यसि। अतः=अस्मात् कारणात्–क्रोधस्य दुर्गतिनिमित्तत्वात् त्वम् आत्मानं कल्याणमार्गे=मोक्षमार्गे प्रवर्तय=प्रापय–इति। एवम्=अनेन प्रकारेण प्रभोः=श्रीवीरस्वामिनः अमृतसमं प्रबोधवचनं=प्रबोधकरोपदेशं, श्रुत्वा=श्रवणविषयीकृत्य चण्डकौशिको विचारसागरे=विचारसमुद्रे पतितः सन् पूर्वभवजातिं=पूर्वभवसम्बन्धिनीं स्वकीयां जातिं स्मरति। तेन=स्वपूर्वभवजातिस्मरणेन सः=चण्डकौशिकसर्पः निजपूर्वभवे=स्वपूर्वजन्मनि क्रोधप्रकृत्या=कोपस्वभावेन निजमरणं=स्वकीयकालधर्मं=प्राप्तिं विज्ञाय=अनुभूय पश्चात्तापं

---

इस प्रकार चंडकौशिक को शांत देखकर वीर प्रभु ने उससे कहा–हे चंडकौशिक! तुम बूझो, बूझो बोध प्राप्त करो, बोध प्राप्त करो, क्रोध को तज दो, तज दो, अर्थात् पूरी तरह त्याग दो, क्यों कि पूर्वभव में क्रोध के कारण ही तुम काल मास में काल करके साँप हुए हो। इस भव में भी वही क्रोध रूप पाप कर रहे हो। इस पाप का आचरण करने से आगामी भव में भी नरक आदि गर्हित गति प्राप्त करोगे, क्यों कि क्रोध दुर्गति का कारण है, अतः तुम अपनी आत्मा को मोक्ष के मार्ग में लगाओ।

इस प्रकार के वीर भगवान् के बोधजनक उपदेश को सुनकर चंडकौशिक विचारों के समुद्र में डूब गया। उसे अपनी पूर्वभवसंबंधी जाति का स्मरण हो आया। पूर्वभव के जाति स्मरण से उसे विदित हो गया कि मैं क्रोध–प्रकृति के कारण ही कालधर्म को प्राप्त हुआ था। तब उसने पश्चात्ताप किया और

---

આવે, તેમ તેમ, તે આગળ ધપતો હોય છે, તેમ આ ગરમ યુદ્ધ, જેમ જેમ લડાતું જાય છે, તેમ તેમ તે વિસ્તૃત થતું જાય છે (૨) શીત યુદ્ધ જુદા જ પ્રકારનું માલુમ પડે છે. તે બહાર દેખાતું નથી, તેની દોડધામ નજરે પડતી નથી, તે કોઇ પ્રકારે હલન-ચલન વાળુ જણાતુ નથી, પરંતુ આતરિક પણે પ્રસરતું હોઈ સર્વ દાવાનળને ઠડુ ગાર બનાવી દે છે. જેમ હિમ એ ઠડુ કુદરતી યુદ્ધ છે, તે શાકભાજી ઝાડ-પાન વિગેરેને બાળીને ભસ્મ કરે છે. તેમા બહારનો અગ્નિ હોતો નથી, પરતુ અદરની સખ્ત તાકત હોય છે. ઠંડા યુદ્ધને બહારનો આડંબર હોતો નથી, પણ તે અંદરખાનેથી સચોટ કામ કરી રહે છે. અને ગમે તેવા પદાર્થોને જડમૂળમાંથી ઉખેડીને નિર્બીજ કરી નાખે છે, તેમ ભગવાનની ઠંડી આત્મ શાતી રૂપ શક્તિએ, સર્પની કષાય રૂપ ઉષ્ણ શક્તિ પર વિજય મેળવ્યો. આ વિજય પ્રસ્થાન રૂપે, સર્પને વિચાર કરતો કરી મૂકયો અને તેને આત્માના અસલ સ્વભાવ તરફ લઇ ગયો.

कृत्वा हिंसकप्रकृतिं=घातुकस्वभावं विमुच्य=परित्यज्य शान्तस्वभावः संजातः। ततः खलु सः=चण्डकौशिकः सर्पः, भिन्नत=त्रिंशत्संख्यानि भक्तानि अनशनेन छेदयित्वा शुभेन=प्रशस्तेन ध्यानेन कालमासे कालं कृत्वा उत्कर्षतः अष्टादशसागरोपमस्थितिके सहस्रारामिधे=सहस्रारनामके अष्टमे देवलोके उत्कृष्टस्थितिकः=अष्टादशसागरोपमस्थितिकः एकावतार=एकभविको देवो जातः। स च देवायुस्समाप्त्यनन्तरं ततश्च्युत्वा महाविदेहे सेत्स्यति=सिद्धो भविष्यति ॥सू०८६॥

मूलम्—तए णं समणे भगवं महावीरे चंडकोसियसप्पोवरि उवयारं किच्चा ताओ अडवीओ पडिणिक्खमइ, पडिणिक्खमित्ता उत्तरवायालामिहे गामे समागच्छइ। तत्थ एगो णागसेणो नामं गाहावई परिवसइ, तस्स एगो पुत्तो आसी, सो विदेसगओ बारसवरिसाओ अकालवुट्ठी विव अकम्हा गिहे समागओ। अओ सो णागसेणो पुत्तागमणमहोच्छवम्मि विविहमसणपाणखाइमसाइमाइं उवक्खडावेइ, उवक्खडावित्ता मित्तणाइ नियग-सयण-संबंधि परियणे भुंजावेइ। तेणं कालेणं तेणं समएणं भगवं पक्खोववासपारणगे भिक्खायरियाए तस्स गिहं अणुप्पविट्ठे। तेण नागसेणेण उक्किट्ठेणं भत्तिबहुमाणेण भगवं खीरं पडिलाभिए। तए णं तस्स नागसेणस्स तेणं दव्वसुद्धेणं दायगसुद्धेणं पडिग्गाहगसुद्धेणं तिविहेणं तिकरणसुद्धेणं भगवंमि पडिलाभिए समाणे गिहंसि य इमाइं पंच दिव्वाइं पाउब्भूयाइं, तं जहा—वसुहारा वुट्ठा १, दसद्धवण्णे कुसुमे निवाइए २, चेलुक्खेवे कए ३, आहयाओ दुंदुहीओ ४, अंतरा वि य णं आगासंसि अहो दाणं२ त्ति घुट्ठे ५ य ॥सू०८७॥

---

अपने हिंसक स्वभाव को त्याग कर शांत स्वभाव धारण कर लिया। तत्पश्चात् वह तीस भक्त अनशन से छेद कर, प्रशस्त ध्यान के साथ, कालमास में काल करके, अठारह सागरोपम की उत्कृष्ट स्थिति वाले सहस्रार नामक आठवें देवलोक में अठारह सागरोपम की स्थिति वाला, एक ही भव करके मोक्ष में जाने वाला देव हुआ। देवायु की समाप्ति के पश्चात्, वहाँ से च्युत होकर वह महाविदेह में सिद्ध होगा ॥सू०८६॥

---

ભગવાનના એ બ વચનોએ, તેના પર અદ્ભુત અસર કરી. તેના પૂર્વભવોનું સ્મરણ કરાવ્યું નરક આદિ ભવોની પ્રાપ્તિનો ખ્યાલ કરાવ્યો. જીવવું દુઃખોની આગ હોરવી. ક્રોધને છોડવા વારંવાર ઉપદેશ દેવા માંડ્યો આવું અપૂર્વ જ્ઞાન અને દિલને હલાવી નાખે તેવા વાત્સલ્યભર્યા વચનો સાંભળવાથી, તેનું મન શાંતરસે પરિણમવા લાગ્યું અને તે સમભાવમાં આવ્યો, નિરાહારપણે રહી, ધ્યાનમગ્ન થયો. આત્મ ચિંતનમાં આયુષ્ય પુરું કરી, તે આઠમા દેવલોકે ઉત્કૃષ્ટ સ્થિતિએ, દેવપણે ઉત્પન્ન થયો. ત્યાંથી ચવી એક ભવ કરી તે સિદ્ધગતિને પામશે. અહીંથી ચવીને મહાવિદેહ ક્ષેત્રમાં જન્મ લેશે. ત્યાનો ભવ છેલ્લો હશે। અને તે ભવમાં, સાધુપણું અંગિકાર કરી પૂર્ણ પુરુષાર્થ થી આત્મ સ્વભાવ પ્રગટ કરી, ઘાતી કર્મોને નષ્ટ કરી, અને આયુષ્ય પૂર્ણ કરી સિદ્ધ સ્થાને પામશે (સૂ૦૮૬)

छाया—एवं खलु श्रमणो भगवान् महावीरः चण्डकौशिकसर्पोपरि उपकारं कृत्वा तस्या अटव्याः प्रतिनिष्क्राम्यति, प्रतिनिष्क्रम्य उत्तरवाचालाभिधे ग्रामे समागच्छति। तत्रैको नागसेनो नाम गाथापतिः परिवसति, तस्यैक एव पुत्र आसीत्, स विदेशगतो द्वादशवर्षात् अकालवृष्टिरिवाऽकस्माद् गृहं समागतः, अतः स नागसेनः पुत्राऽऽगमनमहोत्सवे विविधाशनपानखादिमस्वादिमानि उपस्कारयति, उपस्कार्य, मित्र-ज्ञाति-निजक-स्वजन-सम्बन्धि-परिजनान् भोजयति। तस्मिन् काले तस्मिन् समये भगवान् पक्षोपवासपारणके भिक्षाचर्यायै तस्य गृहमनुप्रविष्टः। तेन नागसेनेन उत्कृष्टेन भक्तिबहुमानेन भगवान् क्षीरं प्रतिलम्भितः। ततः खलु तस्य नागसेनस्य तेन द्रव्यशुद्धेन दायकशुद्धेन प्रतिग्राहकशुद्धेन त्रिविधेन त्रिकरणशुद्धेन भगवति प्रतिलम्भिते सति

मूल का अर्थ—'एवं णं' इत्यादि। इस प्रकार श्रमण भगवान् महावीर चंडकौशिक सर्प पर उपकार करके उस अटवी से बाहर निकले। निकल कर उत्तरवाचाल नामक ग्राम में पधारे। वहाँ नागसेन नामक गाथापति रहता था। उसके एक ही पुत्र था। वह विदेश गया हुआ था। बारह वर्ष बाद अकालवृष्टि के समान वह अचानक ही घर आ गया अतः नागसेन ने पुत्र के आगमन के उत्सव मे त्रिविध प्रकार के अशन, पान, खादिम और स्वादिम बनवाये, और बनवा कर मित्रों, ज्ञातिजनों, निजकजनों, स्वजनों, संबंधीजनों और परिजनों को भोजन जिमाया।

उस काल और उस समय में भगवान् अर्धमास खमण के पारणे के दिन, भिक्षाचर्या के लिये नागसेन के घर में प्रविष्ट हुए। नागसेन ने उत्कृष्ट भक्ति और बहुमान के साथ भगवान् को खीर बहराई। तब द्रव्य-शुद्ध, दायक शुद्ध, प्रतिग्राहक शुद्ध—त्रिकरण शुद्ध आहार भगवान् को बहराने पर नागसेन के घर में यह पाँच

મૂળનો અર્થ—'एवं णं' ઇત્યાદિ શ્રમણ ભગવાન મહાવીર, ચંડકૌશિક સર્પ ઉપર ઉપકાર કરી, અટવીથી બહાર નીકળી ગયા ત્યાથી પ્રસ્થાન કરી, 'ઉત્તર વાચાલ' નામના ગામમાં પધાર્યા આ ગામમા 'નાગસેન' નામનો ગાથાપતિ રહેનો હતો તેને એક પુત્ર હતો, જે વિદેશમા ગયો હતો. બાર વર્ષ બાદ, અકાલે વૃષ્ટિસમાન તે અચાનક પોતાને ઘેર આવી પહોચ્યો. પુત્રનું શુભ આગમન થતા, નાગસેન ઘણો રાજી થઇ ગયો અને તેની ખુશાલીમા તેણે અનેક પ્રકારના મિષ્ટાન્નો બનાવી, વિવિધ પ્રકારના મેવા મિઠાઇઓ તૈયાર કરાવી, મિત્રો-જ્ઞાતિજનો, સ્વજનો, પરિજનો, સબધીઓ અને ઓળખાણ પિછાણવાળા સર્વને નોતર્યા, અને આનંદપૂર્વક ભોજન કરાવ્યા. તે કાળે અને તે સમયે, ભગવાને 'અર્ધમાસ ખમણ' કર્યું હતું. અને તેમના પારણાનો દિવસ આવ્યે, અચાનક નાગસેનના ઘરમા તે પધાર્યા નાગસેને પૂર્ણ ભક્તિપૂર્વક અને માન સાથે, પ્રભુને ક્ષીરનું ભોજન વહોરાવ્યું.

गृहे च इमानि पञ्च दिव्यानि प्रादुर्भूतानि, तद्यथा—वसुधारा वृष्टा १, दशार्द्धवर्णानि कुसुमानि निपातितानि २, चेलोत्क्षेपः कृतः ३, आहता दुन्दुभयः ४ अन्तराऽपि च खलु आकाशे अहोदानमहोदानम् इति घुषितं ५ च ॥सू०८७॥

टीका—'एवं णं समणे भगवं' इत्यादि। एवम्=उक्तप्रकारेण खलु श्रमणो भगवान् महावीरः—चण्डकौशिकसर्पोपरि उपकारं=प्रबोधनेन सिद्धिमार्गित्वलक्षणमुपकारं कृत्वा तस्याः=चण्डकौशिकसर्पाधिष्ठितायाः अटव्याः प्रतिनिष्क्राम्यति=प्रतिनिःसरति प्रतिनिष्क्रम्य उत्तरवाचालाभिधे=उत्तरवाचालनामके ग्रामे समागच्छति। तत्र एको नागसेनो नाम गाथापतिः परिवसति, तस्य=गाथापतेः एक एव पुत्रः आसीत्। सः—गाथापतिपुत्रो विदेशगतः=परदेशगतः सन् द्वादशवर्षात्-द्वादशं वर्षम् अतिवाह्य अकालवृष्टिरिव=आकस्मिक वर्षावत् अकस्मात्=अतर्कितं गृहे समागतः। अतः=पुत्रागमनाद्धेतोः स नागसेनो गाथापतिः, पुत्रागमनमहोत्सवे=

दिव्य प्रादुर्भूत हुए। वे इस प्रकार हैं–(१) सोने की वर्षा हुई (२) पाँच रंग के फूलों की वर्षा हुई (३) वस्त्रों की वर्षा हुई (४) दुंदुभियों का घोर हुआ और आकाशमें 'अहो दान, अहो दान' की ध्वनि हुई ॥सू०८७॥

टीका का अर्थ—इस प्रकार श्रमण भगवान् महावीर ने चंडकौशिक को प्रतिबोध देकर मोक्ष का मार्गी बना कर उसका उपकार किया। तदनन्तर जिस अटवी में चण्डकौशिक रहता था, उस अटवी से प्रभु बाहर निकले। बाहर निकल कर उत्तरवाचाल नामक ग्राम में पधारे। उस ग्राम में नागसेन नाम का एक गृहस्थ रहता था। उसका एकाकी पुत्र विदेश गया हुआ था। बारह वर्ष के बाद, अकाल—वर्षा के समान, अचानक ही वह घर आ पहुँचा। पुत्र के आगमन की खुशी के उपलक्ष्य में नागसेन ने बड़ा भारी

देनार-लेनार अने दातव्य त्रणे शुद्ध होवाथी, नागसेनने घेर पांच दिव्य वस्तुओ प्रगट थई ते आ छे–(१) सुवर्ण वृष्टि (२) पचरंगी फुलोनी वृष्टि (३) दिव्य वस्त्रोनी वृष्टि (४) दुंदुभीनाद (५) 'अहोदान-अहोदान' ना जयनाद भर्यो घोषणा अने ध्वनि (सू०८७)

टीकानो अर्थ—भगवान महावीरे, चंडकौशिकने प्रतिबोध आपी, मोक्षनो अधिकारी बनाव्यो, ने तेने अनेक रीते उपकृत कर्यो. पोतानुं कार्य सफल थयेलुं जोई महान भवी जीवने तेनुं शुद्धपणुं बतावी, भगवान ते स्थानने छोडी जवा प्रभुने तो स्वय विकास सिवाय बीजुं कंई जोईतुं न हतुं स्वय विकास दरम्यान, जो बीजा जीवो पोताना निमित्त पामी सवळी दशा अनुभवे तो, तेमने ते वधारे प्रिय हतुं

ज्यां ज्यां प्रभु स्वय उत्थान माटे पधार्या, त्यां त्यां तेमने अनेक कल्याणमय कार्योना बीज, पोतेपोते वावेलां हतां. अने तेनो उदय आवता सम परिणामी रही मात्र दृष्टा तरीके तेमणे ते जोया कर्या आवी रीते वर्तवामां प्रभुमां स्थिरता

स्वपुत्रस्य गृहाऽऽगमननिमित्तकबृहदुत्सवे त्रिविधाशनपानखादिमस्वादिमानि=अनेकप्रकारकाऽऽहारपान खाद्यस्वा-द्यानि उपस्कारयति=पाचकैर्निष्पादयति, उपस्कार्य=निष्पाद्य मित्र-ज्ञाति-निजक-स्वजन-सम्बन्धि-परिजनान् तत्र-मित्राणि=प्रसिद्धानि, ज्ञातयः=सजातय', निजकाः=स्वकीयाः पुत्रादयः, स्वजनाः=पितृव्यादयः, सम्बधिजनः= पुत्रपुत्रीणां श्वशुरादयः, परिजनाः=दासीदासादयः, इत्येतान् भोजयति, तस्मिन् काले तस्मिन् समये भगवान्=श्रीवीरस्वामी पक्षोपवासपारणके=अर्द्धमासक्षपणपारणादिवसे भिक्षाचर्यायै तस्य-गाथापतेः गृहम् अनुप्रविष्टः। ततः तेन नागसेनेन गाथापतिना उत्कृष्टेन भक्तिवहुमानेन=भक्त्या वहुमानेन च भगवान्=श्रीवीरस्वामी क्षीरं=पायसं प्रतिलम्भितः। ततः खलु तेन द्रव्यशुद्धेन, दायकशुद्धेन, प्रतिग्राहकशुद्धेन त्रिविधेन त्रिकरणशुद्धेन भगवति महावीरे प्रतिलम्भिते=प्रतिग्राहिते सति तस्य नागसेनस्य गृहे इमानि=वक्ष्यमाणानि पञ्च दिव्यानि वस्तूनि प्रादुर्भूतानि=देवैः प्रकटितान्यभवन्, तद्यथा-देवैर्वसुधारा वृष्टा १, दशार्द्धवर्णानि=पञ्चवर्णानि कुसुमानि= पुष्पाणि निपातितानि २, चेलोत्क्षेपः=वस्त्रवृष्टिः कृतः ३, दुन्दुभयः आहताः=वादिताः ४, अन्तराऽपि च खलु आकाशे 'अहो दानम् अहो दानम्' इति घुषितम्=उच्चैरुच्चारितम् ॥सू०८७॥

---

उत्सव मनाया। उस में नाना तरह के अशन, पान, खाद्य और स्वाद्य :भोजन पाचकों से बनवाये। बनवाकर मित्रों को, सजातीयों को, पुत्र आदि निजक जनों को, काका आदि स्वजनों को, रिश्तेदारों को तथा दास-दासी आदि परिजनों को जिमाया। उस काल उस समय में भगवान् वीर प्रभु अर्धमास खमण के पारणक के दिन भिक्षाचर्या (गोचरी) के लिए उस गाथापति के घर में प्रविष्ट हुए। नागसेन गाथापति ने उत्कृष्ट भक्ति और बहुमान से भगवान् को खीर से प्रतिलम्भित किया-खीर वहराई। तब द्रव्यशुद्ध, दायकशुद्ध और पात्रशुद्ध इस प्रकार त्रिविधशुद्ध और त्रिकरण (मन, वचन, काय) से शुद्ध दान देने से नागसेन के घर में आगे कही जाने वाली पाँच दिव्य वस्तुओं का प्रादुर्भाव हुआ, अर्थात् पांचदिव्य

---

વધતી ગઈ અને બહારના દુ ખોના નિમિત્તો ઉત્પન્ન કરનાર જીવો પણ, ભગવાનની અતુલ ક્ષમા અને ધીરજ તેમજ સહન શકિતને જોઈ, પ્રાતબોધિત થયા. તેમાંના ઘણા, સ્વપરાક્રમ ફોરવી ભગીરથ પુરુષાર્થ આદરી, પાંચમી ગતિએ જશે. અર્થાત મોક્ષ પામશે.

પ્રભુ આત્મ-સ્થિરતામા લય થવા તપશ્ચર્યા કરતા અને તે પદર-પદર દિવસ સુધી ચાલ્યા કરતી. આવી તપશ્ચર્યાને પારણે કોઈપણ યોગ્ય ઘરમા ભિક્ષાર્થે પહોંચી જતા. ત્યા પોતાના હાથને પાત્ર બનાવી, ઉભા રહેતા, અને ઘર ધણી નિર્દોષ આહાર જે આપે તેનું ગ્રહણ કરતા

मूलम्—तए ण से समणे भगवं महावीरे तओ गामाओ निग्गच्छइ, निग्गच्छित्ता सेयंवियाए नयरीए मज्झं-मज्झेण विहरमाणे जेणेव सुरहिपुरं नयरं तेणेव उवागच्छइ। तत्थ णं पुढवीए पल्हाडियं विव सागरमिव उच्छलंततरंगतरंगियं गंगाणइं उत्तरिउकामे भगवं सत्तीरे आगमीअ। तएणं से भगवं नाविअस्स उग्गहेणं तीए नावाए ठिए। चलमाणी सा नावा अगाहजलम्मि पत्ता। तत्थ सुदाढनामे एगो नागकुमारदेवो निव सीअ। जो तिविट्ठवासुदेवभवे भगवओ जीवेण हयस्स सीहस्स जीवो आसि। सो सुदाढदेवो भगवं दट्ठूणं पुव्ववेरं सरिय कोहेण धमधमेंतो आसुरत्तो मिसिमिसेमाणो भगवओ पासे आगतूण आगासट्ठिओ किलकिलरवं कुणमाणो एवं वयासी—"रे भिक्खू! कत्थ गच्छसि? चिट्ठ चिट्ठ" एवं कहिय कप्पंतकालपवणमिव भयं-करं संवट्टगाभिहं वाउं विउव्विय उवसग्गं करेइ। तं जहा—तेण संवट्टगवाउणा रुक्खा पडिया, पव्वया कंपिया, पुप्फिपडलेण मउणो अंधयारो जाओ, जलम्मीओ आगासं फुसिउमिव उच्छलंति पच्छा पडंति य, गंगाए जलम्मि सा नावा वि उवरि आगासे उप्पडइ निवडइ य, तेण दोलायमाणीए तीए नावाए खंभो भग्गो, पडपडाणि तुट्टियाणि, पव्वराडिया पडागा फालिया, नावट्ठिया जणा भयभीया सयसयजीवम्मि संकेमाणा कल-कलारवं कुणमाणा। नावाए भग्गो नाविओ मउत्तिमओ किंकायव्वमूढो संजाओ।

तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स पुव्वभवमित्तेहिं कंबल-संबलाभिहेहिं दोहिं वेमाणियं देवेहिं ओहिणा सुदाढाभिहनागकुमारदेवकयं उवसग्गं आभोगिय तत्थ आगमिय स निवारिय, सा नावा तीरे ठाविया। तओ ते देवा सुदाढं नागकुमारदेवं निब्भच्छिय हणिउमुज्जया, करुणारसिंधुणा भगवया ते निवारिया। तएणं ते दोन्नि देवा नियकरे पगाढिय भगवं वंदंति नमसंति, वंदित्ता नमंसित्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया।

समभावर वीयरागे भगवंउवसग्गकारगे सुदाढदेवे कोहभावं उवगारकारगेसु कंबलसंबलेसु देवेसु य रागभावं न किंचि करीअ, उभयत्थवि सममावं दरिसीअ।

तएणं नावट्ठिया सव्वे जणा नियजीवरक्खायार सयलजगजीववच्छलं भगवं जाणिय भत्तिबहुमाणेणं पणमंसु ॥सू०८८॥

---

प्रकट हुए। वे यह हैं—(१) देवों ने स्वर्ण की वर्षा की (२) पाँच वर्णों के पुष्पों की वर्षा की (३) वस्त्रों की वृष्टि की (४) दुंदुभियां बजाई और (५) आकाश में 'अहोदान, अहोदान' की घोषणा की ॥सू०८७॥

देनार देनार अने दातव्य वस्तु आ त्रणे मन वचन कायाथी शुद्ध होवाने लीधे त्यां पांच दिव्य ... (सू०८७)

छाया--ततः खलु स श्रमणो भगवान् महावीरस्ततो ग्रामान्नि च्छति, निर्गत्य श्वेताम्बिकाया नगर्या मध्यमध्येन विहरमाणो यत्रैव सुरभिपुर नगरं तत्रैव उपागच्छति। तत्र खलु पृथिव्याः पट्टशाटिकामिव सागरमिवोच्छलत्तरङ्गतरङ्गितां गङ्गानदीं तरीतुकामो भगवान् तत्तीरे आगच्छत्। ततः खलु स भगवान् नाविकस्य अवग्रहेण तस्यां नावि स्थितः। चलन्ती सा नौरगाधजले प्राप्ता। तत्र सुदंष्ट्रनामा एको नागकुमारदेवो न्यवसत्। यस्त्रिपृष्ठवासुदेवभवे भगवतो जीवेन हतस्य सिंहस्य जीव आसीत्। स सुदंष्ट्रदेवो भगवन्तं दृष्ट्वा पूर्ववैरं स्मृत्वा क्रोधेन धमधमायमानः आशुरक्तो मिसमिसायमानो भगवतः पार्श्वे आगत्य आकाशस्थितः किलकिलरवं

---

मूल का अर्थ—'तएणं' इत्यादि। तत्पश्चात् श्रमण भगवान् महावीर उस उत्तरवाचाल गाँव से बाहर निकलते हैं। वहाँ निकल कर श्वेताम्बिका नगरी के बीचों बीच होकर जहाँ सुरभिपुर नामक नगर था, वहाँ पधारते हैं। वहाँ पृथिवी की श्वेत साड़ी के सदृश तथा समुद्र के समान उछलती हुई तरंगों से तरंगित गंगा नदी को पार करने की इच्छा से भगवान् उसके किनारे आये। तत्पश्चात् नाविक की आज्ञा लेकर भगवान् नौका पर आरूढ हुए। चलती-चलती वह नौका अथाह जल में जा पहुँची। वहाँ सुदंष्ट्र नामक सिंह का एक नाग कुमार देव निवास करता था, जो त्रिपृष्ठ वासुदेव के भव मे भगवान् के द्वारा मारे गये सिंहका जीव था। अर्थात् उस पूर्व भव मे भगवान् त्रिपृष्ठ वासुदेव थे, और यह देव सिंह था। त्रिपृष्ठ वासुदेव ने उस सिंह को मारा था। अतः सुदंष्ट्र देव भगवान् को देखकर, पूर्वभव के वैर का स्मरण कर के, क्रोध से धमधमाता हुआ, क्रुद्ध होता हुआ, क्रोध से जलता हुआ, भगवान् के पास आकर, अधर में स्थित होकर

---

મૂલનો અર્થ—'तए णं' ઇત્યાદિ. ત્યારપછી ભગવાન ઉત્તર વાચાળ નામના ગ્રામમાંથી યથા સમયે નીકળી શ્વેતાંબિકા નગરીની મધ્યમાંથી પસાર થઈ સુરભિપુર નામના નગરમાં પધાર્યા. જાણે પૃથ્વીએ ધવલવસ્ત્ર ધારણ કર્યું હોય તેવાં નિર્મળ હિલોળા ખાતાં પાણી વાળી અને વિશાળ કાય સમુદ્રની જેમ મોજાંઓ ઉછાળતી એવી ગંગા નદીના તટે પ્રભુ પધાર્યા અને નદીને પેલે પાર જવા ઇચ્છા કરી ત્યાં પડેલી નૌકાના માલિકની આજ્ઞા લઈ ભગવાન તે નૌકામાં બેઠા. પાણીનો પંથ કાપતી આ નૌકા અગાધ જળ મધ્યે આવી પહોંચી. આ મધ્ય ભાગમાં 'સુદંષ્ટ્રક' નામનો એક નાગકુમાર દેવ નિવાસ કરી રહ્યો હતો. ત્રિપૃષ્ઠવાસુદેવના ભવમાં ભગવાને જે સિંહને માર્યો હતો તેજ સિંહનો આ જીવ હતો અને તે 'સુદંષ્ટ્રક' નામના નાગકુમાર તરીકે અહીં જન્મ્યો હતો.

આ સુદંષ્ટ્રક દેવે ભગવાનને જોયા કે તરત જ પૂર્વભવના વેરનું સ્મરણ થઈ આવ્યું. સ્મરણ માત્રથી તે ક્રોધાગ્નિથી બળવા લાગ્યો અને તરતજ ભગવાન પાસે આવી હવામાં અદ્ધર ઉભો રહી 'કિલ-કિલ' અવાજ કરતાં

